## श्रावण मङ्गळ गौरी पूजा

**Check List**

1. Altar, Deity (statue/photo),
2. Two big brass lamps (with wicks, oil/ghee)
3. Matchbox, Agarbatti
4. Karpoor, Gandha Powder, Kumkum, gopichandan, haldi
5. Sri Mudra (for Sandhyaavandan), Vessel for Tirtha, Yajnopaviita
6. Puujaa Conch, Bell, One aaratii (for Karpoor), Two Aaratiis with wicks
7. Flowers, Akshata (in a container), tulsi leaves
8. Decorated Copper or Silver Kalasha, Two pieces of cloth (new),
9. Coconut, 1/2 kg. Rice, Bananas 6, gold coin, gold chain
10. Extra Kalasha, 3 trays, 3 vessels for Abhisheka
11. Betel nuts 6, Betel nut Leaves 12, Banana Leaves 2, Mango Leaves 5-25
12. Dry Fruits, 5 bananas, 1 coconut - all for naivedya
13. Panchaamrita - Milk, Curd, Honey, Ghee, Sugar, Tender Coconut Water
14. Puja Book
15. Red flowers and red flower malas.

१ At the regular altar

ॐ सर्वेभ्यो गुरुभ्यो नमः ।
ॐ सर्वेभ्यो देवेभ्यो नमः ।
ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः ॥
प्रारंभ कार्यं निर्विघ्नमस्तु । शुभं शोभनमस्तु ।
इष्ट देवता कुलदेवता सुप्रसन्ना वरदा भवतु ॥
अनुज्ञां देहि ॥

At the श्रावण मङ्गळ गौरी altar

---

२ आचमनः

(Sip one spoon of water after each mantra.
Take a little water from the vessel for worship with an offering spoon onto the palm and sip it. This is called achaman. Just as bathing causes external purification, partaking water in this way is responsible for internal purification. This act is repeated thrice. Thus physical, psychological and spiritual, internal purification is brought about.)

द्विराचम्य

ॐ केशवाय स्वाहाः. ॐ नारायणाय स्वाहाः.
ॐ माधवाय स्वाहाः.
ॐ केशवाय स्वाहाः. ॐ नारायणाय स्वाहाः.
ॐ माधवाय स्वाहाः.

(Now we chant the 21 names of the Lord, in order to concentrate on the Lord)

ॐ गोविंदाय नमः . ॐ विष्णवे नमः .
ॐ मधुसूदनाय नमः . ॐ त्रिविक्रमाय नमः .
ॐ वामनाय नमः . ॐ श्रीधराय नमः .
ॐ हृषीकेशाय नमः . ॐ पद्मनाभाय नमः .
ॐ दामोदराय नमः . ॐ सङ्कर्षणाय नमः .
ॐ वासुदेवाय नमः . ॐ प्रद्युम्नाय नमः .
ॐ अनिरुद्धाय नमः . ॐ पुरुषोत्तमाय नमः .
ॐ अधोक्षजाय नमः . ॐ नारसिंहाय नमः .
ॐ अच्युताय नमः . ॐ जनार्दनाय नमः .
ॐ उपेंद्राय नमः . ॐ हरये नमः .
श्री कृष्णाय नमः ॥

---

३ प्राणायामः

(Due to pranayam, the rajas component decreases and the sattva component increases.)

ॐ प्रणवस्य परब्रह्म ऋषिः . परमात्मा देवता .
दैवी गायत्री छन्दः . प्राणायामे विनियोगः ॥

ॐ भूः . ॐ भुवः . ॐ स्वः . ॐ महः .
ॐ जनः . ॐ तपः . ॐ सत्यं .
ॐ भूर्भुवः स्वः ।
ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमही
धियो यो नः प्रचोदयात् ॥

पुनराचमन

(Repeat Achamana 2 - given above)

ॐ आपोज्योति रसोमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥

(Apply water to eyes and understand that you are of the nature of Brahman)

---

४ सङ्कल्पः

(Holding unbroken consecrated rice (akshata) and an offering spoon (pali) with water in the cup of one's hand one should chant the mantra with the resolve, 'I of the .....lineage (gotra), ..... am performing the .... ritual to obtain the benefit according to the Shrutis, Smrutis and Purans in order to acquire .... result and then should offer the water from the hand into the circular, shelving metal dish (tamhan). Offering the water into the circular, shelving dish signifies the completion of an act.)

सर्व देवता प्रार्थना

(Stand and hold a fruit in hand during sankalpa)

ॐ श्रीमान् महागणाधिपतये नमः .

श्री गुरुभ्यो नमः . श्री सरस्वत्यै नमः .

श्री वेदाय नमः . श्री वेदपुरुषाय नमः .

इष्टदेवताभ्यो नमः |

(Prostrations to your favorite deity)

कुलदेवताभ्यो नमः |

(Prostrations to your family deity)

स्थान देवताभ्यो नमः |

(Prostrations to the deity of this house)

ग्रामदेवताभ्यो नमः |

(Prostrations to the deity of this place)

वास्तुदेवताभ्यो नमः |

(Prostrations to the deity of all the materials we have collected)

शचीपुरंदराभ्यां नमः |

(Prostrations to the Indra and shachii)

उमामहेश्वराभ्यां नमः |

(Prostrations to Shiva and pArvati)

लक्ष्मीनारायणाभ्यां नमः |

(Prostrations to the Lords who protect us - LakShmi and NArAyaNa)

मातापितृभ्यां नमः |

(Prostrations to our parents)

सर्वेभ्यो देवेभ्यो नमो नमः |

(Prostrations to all the Gods)

सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः |

(Prostrations to all Brahamanas - those who are in the religious path)

एतद्कर्म प्रधान देवताभ्यो नमो नमः |

(Prostrations to Goddess devi, the main deity if this puja)

|| अविघ्नमस्तु ||

सुमुखश्च एकदंतश्च कपिलो गजकर्णकः .
लंबोदरश्च विकटो विघ्ननाशो गणाधिपः ||
धूम्रकेतुर्गणाध्यक्षो बालचन्द्रो गजाननः .
द्वादशैतानि नामानि यः पठेत् श्रुणुयादपि ||
विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा .
संग्रामे संकटेचैव विघ्नः तस्य न जायते ||

(Whoever chants or hears these 12 names of Lord Ganesha will not have any obstacles in any of their endeavours)

शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् |
प्रसन्नवदनं ध्यायेत् सर्व विघ्नोपशांतये ||

सर्वमङ्गल माङ्गल्ये शिवे सर्वार्थ साधिके |
शरण्ये त्र्यंबके देवी नारायणि नमोऽस्तुते ||

(We completely surrender ourselves to that Goddess who embodies auspiciousness, who is full of auspicious-ness and who brings auspicousness to us)

सर्वदा सर्व कार्येषु नास्ति तेषां अमङ्गलम् |
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ||

(When Lord Hari, who brings auspiciousness is situated in our hearts, then there will be no more inauspiciousness in any of our undertakings)

तदेव लग्नं सुदिनं तदेव ताराबलं चंद्रबलं तदेव .
विद्याबलं दैवबलं तदेव लक्ष्मीपतेः तेंघ्रिऽयुगं

स्मरामि ||

(What is the best time to worship the Lord? When our hearts are at the feet of Lord Narayana, then the strength of the stars, the moon, the strength of knowledge and all the Gods will combine and make it the most auspicious time and day to worship the Lord)

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः .
येषां इन्दिवरश्यामो हृदयस्थो जनार्दनः ||

(When the Lord is situated in a person's heart, he will always have profit in his work and victory in all that he takes up and there is no question of defeat for such a person)

विनायकं गुरुं भानुं ब्रह्माविष्णुमहेश्वरान् |
सरस्वतीं प्रणम्यादौ सर्व कार्यार्थ सिद्धये ||

(To achieve success in our work and to find fulfillment we should first offer our prayers to Lord Vinayaka and then to our teacher, then to the Sun God and to the holy trinity of Brahma, ViShNu and Shiva)

श्रीमद् भगवतो महापुरुषस्य विष्णोराज्ञया
प्रवर्तमानस्य
अद्य ब्रह्मणो द्वितीय परार्धे विष्णुपदे श्री
श्वेतवराह कल्पे
वैवस्वत मन्वन्तरे --------- देशे शालिवाहन शके
वर्तमाने व्यवहारिके ------------ नाम संवत्सरे --------
-------- आयणे --------------ऋतौ ------------------
मासे -------------- पक्षे ----- तिथौ ----- नक्षत्रे -----
वासरे सर्व ग्रहेषु यथा राशि स्थान स्थितेषु सत्सु एवं
गुणविशेषेण विशिष्टायां
शुभपुण्यतिथौ मम आत्मन श्रुतिस्मृति पुराणोक्त
फलप्राप्यर्थं मम सकुटुम्बस्य क्षेम स्थैर्य आयुरारोग्य
चतुर्विध पुरुषार्थ सिध्यर्थं अंगीकृत श्री श्रावण मङ्गळ
गौरी व्रतांगत्वेन संपादित सामग्रव्या श्री श्रावण
मङ्गळ गौरी प्रीत्यर्थं यथा शक्त्या यथा मिलिता
उपचार द्रव्यैः श्री सूक्त पुराणोक्त मन्त्रैश्च ध्यान
आवाहनादि षोडशोपचारे श्री श्रावण मङ्गळ गौरी
प्रीत्यर्थं पूजनं तथा व्रतोक्त कथा श्रवणं च करिष्ये||

इदं फलं मया देवि स्थापितं पुरतस्तव |
तेन मे सुफलावाप्तिर् भवेत् जन्मनि जन्मनि ||
(keep fruits in front of the Goddess)

---

५. षडङ्ग न्यास
(Purifying the body)

---

५.(१) कर न्यास
(Purifying the hands)

ॐ ह्रां | अंगुष्ठाभ्यायां नमः | हृदयाय नमः ||
(touch the thumbs)
ॐ ह्रीं | तर्जनीभ्यां नमः | शिरसे स्वाहाः ||
(touch both fore fingers)
ॐ ह्रुं | मध्यमाभ्यां नमः | शिखायै वषट् ||
(touch middle fingers)
ॐ ह्रैं | अनामिकाभ्यां नमः | कवचाय हुम् ||
(touch ring fingers)
ॐ ह्रौं | कनिष्ठिकाभ्यां नमः | नेत्रत्रयाय वौषट् ||
(touch little fingers)
ॐ ह्रः | करतलकरपृष्ठाभ्यां नमः | अस्त्राय फट् ||
(touch palms and over sleeve of hands)

---

५.(२) दिग्बन्धन
( show mudras)

ॐ भूर्भुवस्वरोम् इति दिग्बन्धः ।
(snap fingers, circle head clockwise and clap hands)
दिशो बद्नामि ॥
(shut off all directions i.e. distractions so that we can concentrate on the Goddess)

---

६ गणपति पूजा
(To prevent any obstacle from disrupting an auspicious occasion, it is begun with the worship of Lord Ganapati.)

आदौ निर्विघ्नता सिध्यर्थं महा गणपति पूजनं करिष्ये .

ॐ गणानां त्वा शौनको गृत्समदो गणपतिर्जगती गणपत्यावाहने विनियोगः ॥
(pour water)

ॐ गणानां त्वा गणपतिं हवामहे .
कविं कवीनामुपम श्रवस्तमं .
ज्येष्ठराज ब्रह्मणां ब्रह्मणस्पत .
आ नः शृण्वन्नूतिभिः सीदसादनं ॥

भूः गणपतिं आवाहयामि .
भुवः गणपतिं आवाहयामि .
स्वः गणपतिं आवाहयामि .

ॐ भूर्भुवस्वः सांगं सपरिवारं
सायुधं सशक्तिकं महागणपतिं आवाहयामि ।
(O great Ganapati come along with Riddhi, Buddhi, your entire family, all your weapons and might')

ॐ भूर्भुवस्वः महागणपतये नमः ध्यायामि. ध्यानम् समर्पयामि ।
ॐ महागणपतये नमः . आवाहनं समर्पयामि ।
ॐ महागणपतये नमः . आसनं समर्पयामि .
ॐ महागणपतये नमः . पाद्यं समर्पयामि .
ॐ महागणपतये नमः . अर्घ्यं समर्पयामि .
ॐ महागणपतये नमः . आचमनीयं समर्पयामि .
ॐ महागणपतये नमः . स्नानं समर्पयामि .
ॐ महागणपतये नमः . वस्त्रं समर्पयामि .
ॐ महागणपतये नमः . यज्ञोपवीतं समर्पयामि .
ॐ महागणपतये नमः . चंदनं समर्पयामि .
ॐ महागणपतये नमः . परिमल द्रव्यं समर्पयामि
ॐ महागणपतये नमः . पुष्पाणि समर्पयामि .
ॐ महागणपतये नमः . धूपं समर्पयामि .
ॐ महागणपतये नमः . दीपं समर्पयामि .
ॐ महागणपतये नमः . नैवेद्यं समर्पयामि .
ॐ महागणपतये नमः . ताम्बूलं समर्पयामि .
ॐ महागणपतये नमः . फलं समर्पयामि .
ॐ महागणपतये नमः . दक्षिणां समर्पयामि .
ॐ महागणपतये नमः . आर्तिक्यं समर्पयामि .

ॐ भूर्भुवस्वः महागणपतये नमः .
मन्त्रपुष्पं समर्पयामि .
ॐ भूर्भुवस्वः महागणपतये नमः .
प्रदक्षिणा नमस्कारान् समर्पयामि .

ॐ भूर्भुवस्वः महागणपतये नमः . छत्रं समर्पयामि .
ॐ महागणपतये नमः . चामरं समर्पयामि .

ॐ महागणपतये नमः . गीतं समर्पयामि ।

ॐ महागणपतये नमः . नृत्यं समर्पयामि .

ॐ महागणपतये नमः . वाद्यं समर्पयामि .

ॐ महागणपतये नमः . सर्व राजोपचारान्
समर्पयामि ॥

॥ अथ प्रार्थना ॥

ॐ वक्रतुण्ड महाकाय कोटिसूर्य समप्रभ .
निर्विघ्नं कुरु मे देव सर्व कार्येषु सर्वदा ॥

ॐ भूर्भुवस्वः महागणपतये नमः . प्रार्थनां
समर्पयामि ।

अनया पूजया विघ्नहर्ता महागणपतिः प्रीयताम् ॥

(Offering of flowers - May Shri Mahaganapati, the vanquisher of all obstacles be appeased with this worship of mine', chanting thus water should be released.)

---

७ दीप स्थापना

अथ देव्यै वाम भागे दीप स्थापनं करिष्ये ।

अग्निर्नाग्निः समिध्यते कविर्ग्रहपतिर्युवा हव्यवात्
जुवास्यः ॥

(light the lamps)

---

८ भूमि प्रार्थना

(open palms and touch the ground.
first the earth (ground) on the right hand side (since the host performing the religious ceremony is facing the east, the hand touching the ground is in the southern direction) and then the earth on the left hand side, in front of oneself (that is the northern direction) should be touched. Energies from the south are distressing. To prevent them from causing distress, one offers obeisance to them by touching the earth. The energies from the north are however saluted as they are pleasant.)

महीध्यौः पृथिवीचन इमं यज्ञं मिमिक्षतां
पिप्रतान्नो भरीमभिः ॥

---

९ धान्य राशि

ॐ औषधाय संवदंते सोमेन सहराज्ञ .
यस्मै कृणेति ब्राह्मणस्थं राजन् पारयामसि ॥

(Touch the grains/rice/wheat)

---

१० कलश स्थापना

(Two small heaps of rice should be made on the ground amidst chanting mantras. Later, chanting the mantra two pots of either gold, silver, copper or unbroken earthen pots should be placed on these two heaps.)

ॐ आ कलशेषु धावति पवित्रे परिसिंच्यते
उक्तैर्यज्ञेषु वर्धते ॥

(keep kalasha on top of rice pile)

ॐ इमं मे गङ्गे यमुने सरस्वती शुतुद्रि स्तोमं
सचता परुष्ण्या .
असिक्न्य मरुद्वृधे वितस्तयार्जीकीये श्रुणुह्या
सुषोमया ॥

(fill kalasha with water)

ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं .
ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रियं ॥

(sprinkle in/apply ga.ndha to kalasha)

ॐ या फलिनीर्या अफला अपुष्पायाश्च पुष्पिणीः .
बृहस्पति प्रसोतास्थानो मंचत्वं ह सः ॥

(put betel nut in kalasha)

ॐ सहिरत्नानि दाशुषुसुवाति सविता भगः .
तम्भागं चित्रमीमहे ॥

(put jewels / washed coin in kalasha)

ॐ हिरण्यरूपः हिरण्य सन्द्रिग्पान्न पात्स्येदु हिरण्य वर्णः .
हिरण्ययात् परियोनेर्निषद्या हिरण्यदा ददत्थ्यन् नमस्मै ||
(put gold / daxina in kalasha)
ॐ काण्डात् काण्डात् प्ररोहंती परुषः परुषः परि एवानो दूर्वे प्रतनु सहस्रेण शतेन च ||
(put duurva / karika )
ॐ अश्वत्थेवो निशदनं पर्णिवो वसतिश्कृत .
गो भाज इत्किला सथयत्स नवथ पूरुषं ||
(put five leaves in kalasha)
ॐ युवासुवासः परीवीतागात् स उश्रेयान् भवति जायमानः .
तं धीरासः कावयः उन्नयंति स्वाद्ध्यो स्वाद्ध्यो मनसा देवयंतः||
(tie cloth for kalasha)
ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत .
वस्ने व विक्रीणावः इषमूर्जं शतक्रतो ||
(copper plate and ashhTadala with kuMkuM)
इति कलशं प्रतिष्ठापयामि ||

सकल पूजार्थे अक्षतान् समर्पयामि ||

---

११ वरुण पूजन
(On the second kalasha)

तत्वायामि शुनः शेपोः वरुण त्रिष्टुप् कलशे वरुणावाहने विनियोगः ||

ॐ तत्वायामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः .
आहेलमानो वरुणः बोध्युरुशं समान आयुः प्रमोषिः
ॐ भूर्भुवःस्वः वरुणाय नमः .चंदनं समर्पयामि ||
(add to kalasha)
ॐ भूर्भुवःस्वः . वरुणाय नमः . अक्षतान् समर्पयामि||
(add to kalasha)
ॐ भूर्भुवःस्वः . वरुणाय नमः . हरिद्रा कुंकुमं समर्पयामि ||
ॐ भूर्भुवःस्वः . वरुणाय नमः. धूपं समर्पयामि ||
ॐ भूर्भुवःस्वः . वरुणाय नमः. दीपं समर्पयामि ||
ॐ भूर्भुवःस्वः . वरुणाय नमः. नैवेद्यं समर्पयामि ||
ॐ भूर्भुवःस्वः . वरुणाय नमः .
सकल राजोपचारार्थे अक्षतान् समर्पयामि ||

अवते हेळो वरुण नमोभिरिव यज्ञेभिरीमहे हविर्भिः .
क्षयं नमस्मभ्यं सुरप्रचेता राजन् नेनांसि शिश्रथः कृतानि ||
वरुणाय नमः . मन्त्र पुष्पं समर्पयामि ||
प्रदक्षिणा नमस्कारान् समर्पयामि ||

अनया पूजया भगवान् श्री महा वरुण प्रीयताम् ||
सकल पूजार्थे अक्षतान् समर्पयामि ||

---

१२ कलश पूजन
(continue with second kalasha)

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः .
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ||
कुक्षौतु सागराः सर्वे सप्त द्वीपा वसुंधराः .
ऋग्वेदोथ यजुर्वेदः सामवेदोह्यथर्वणः ||
अंगैश्च सहिताः सर्वे कलशंतु समाश्रिताः .
अत्र गायत्री सावित्री शांति पुष्टिकरी तथा ||

आयान्तु देव पूजार्थं अभिषेकार्थ सिद्धये ||

ॐ सितासिते सरिते यत्र संगथे तत्राप्लुतासो दिवमुत्पतंति .
ये वैतन्वं विस्रजन्ति धीरास्ते जनासो अमृतत्वं भजन्ति ||

(Those who want to attain immortality take a dip in the confluence of the Ganges, yamuna and sarasvati rivers at the prayag. Let the water in this kalasha become like the water from the holy rivers)

|| कलशः प्रार्थनाः ||

कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बलम् |
योग्यतां पापहानिं च पुण्यं वृद्धिं च साधयेत् ||

(Let this kalasha increase our life span, presence of mind, intellect,wealth, strength and status, destroy our sins and increase our merits or puNya)

सर्व तीर्थमयो यस्मात् सर्व देवमयो यतः .
अतः हरिप्रियोऽसि त्वं पूर्णकुंभं नमोऽस्तुते ||

(All the holy waters, and all the Gods are now present in this kalasha. Our prostrations to this puurNakumbha which is hence dear to Lord Hari)

कलशदेवताभ्यो नमः .
सकल पूजार्थे अक्षतान् समर्पयामि ||

|| मुद्रा ||

(Show mudras as you chant )

निर्वीषी करणार्थे तार्क्ष मुद्रा . (to remove poison)
अमृती करणार्थे धेनु मुद्रा . (to provide nectar - amrit)
पवित्री करणार्थे शङ्ख मुद्रा . (to make auspicious)
संरक्षणार्थे चक्र मुद्रा . (to protect)
विपुलमाया करणार्थे मेरु मुद्रा . (to remove mAyA)

---

१३ शङ्ख पूजन

(pour water from kalasha to shaNkha add gandha flower)

शङ्खं चंद्रार्क दैवतं मध्ये वरुण देवताम् |
पृष्ठे प्रजापतिं विंद्याद् अग्रे गंगा सरस्वतीम् ||

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे |
नमितः सर्व देवैश्च पाञ्चजन्य नमोऽस्तुते ||

(This shaNkha has now become like the pAnchajanya, which has come out of the ocean and which is the hands of Lord MahaviShNu. Our prostrations to the pAnchajanya)

पाञ्चजन्याय विद्महे . पावमानाय धीमहि .
तन्नो शङ्खः प्रचोदयात् ||

शङ्खाय नमः .
सकल पूजार्थे अक्षतान् समर्पयामि ||

---

१४ घंटार्चना

(Pour drops of water from sha~Nkha on top of the bell apply ga.ndha flower)

आगमार्थन्तु देवानां गमनार्थन्तु राक्षसाम् |
कुर्वे घंटारवं तत्र देवताह्वा लक्षणम् ||
ज्ञानथोऽज्ञानतोवापि कांस्य घंटान् नवादयेत् |
राक्षसानां पिशाचनां तद्देशे वसतिर्भवेत् |

तस्मात् सर्व प्रयत्नेन घंटानादं प्रकारयेत् ||

(When the bell is rung, knowingly or unknowingly, all the good spirits are summoned and all the evil spirits are driven away)

घंट देवताभ्यो नमः |

सकल पूजार्थे अक्षतान् समर्पयामि ||

(Ring the gha.nTA)

---

१५ आत्मशुद्धि

( Sprinkle water from sha~Nkha on puja items and devotees)

अपवित्रः पवित्रो वा सर्वावस्थांगतोऽपि वा |

यः स्मरेत् पुंडरीकाक्षं सः बाह्याभ्यंतरः शुचिः ||

---

१६ षट् पात्र पूजा

( put tulasi leaves or axatAs in empty vessels)

वायव्ये अर्घ्यं |

नैऋत्ये पाद्यं |

ईशान्ये आचमनीयं |

आग्नेये मधुपर्कं |

पूर्वे स्नानीयं |

पश्चिमे पुनराचमनं |

---

१७ पञ्चामृत पूजा

( put tulasi leaves or axataas in vessels.
Panchamrit is nectar of five ingredients -
a mixture of milk, curds, clarified butter (ghee), honey and sugar.)

क्षीरे मङ्गळायै नमः | (keep milk in the centre)

दधिनि गौर्यै नमः | (curd facing east )

घृते राजीवमुख्यै नमः | (Ghee to the south)

मधुनि शिवायै नमः | ( Honey to west )

शर्करायां पार्वत्यै नमः | ( Sugar to north)

---

१८ द्वारपालक पूजा

पूर्वद्वारे द्वारश्रियै नमः | धात्रे नमः| विधात्रे नमः|

दक्षिणद्वारे द्वारश्रियै नमः | चण्डाय नमः |

प्रचण्डाय नमः |

पश्चिमद्वारे द्वारश्रियै नमः | जयाय नमः |

विजयाय नमः |

उत्तरद्वारे द्वारश्रियै नमः | गङ्गायै नमः |

यमुनायै नमः |

ॐ श्री श्रावण मङ्गळ गौर्यै नमः द्वारपालक पूजां समर्पयामि ||

---

१९ पीठ पूजा

पीठस्य अधोभागे

आधारशक्त्यै नमः ||

आदिकूर्माय नमः ||

अनन्ताय नमः |

वराहाय नमः ||

स्वर्णवेदिकायै नमः ||

रत्नमंडपाय नमः ||

सिंहासनाय नमः ||

तन्मध्ये श्रावण मङ्गळ गौर्यै नमः |

पीठ पूजां समर्पयामि ||

---

२० दिग्पालक पूजा (start from east of kalasha or deity)

इंद्राय नमः,

अग्नये नमः,

यमाय नमः,

नैऋतये नमः,

वरुणाय नमः,

वायवे नमः,

कुबेराय नमः,

ईशानाय नमः,

इति दिग्पालक पूजां समर्पयामि

---

२१ नव दोरा स्थापनं (one new red thread with 12 knots to be placed on the altar and puja to be done for the same)

क्षेमं नवं महादेव्य कुम्कुमाक्तं सुदोरकं

द्वादश ग्रन्तिसम्युक्तम् उपकल्प प्रपूज्यत

---

२२ प्राण प्रतिष्ठा

(hold flowers/axata in hand)

ध्यायेत् सत्यम् गुणातीतं गुणत्रय समन्वितं

लोकनाथं त्रिलोकेशं कौस्तुभाभरणं हरिम् |

नीलवर्णं पीतवासं श्रीवत्सपदभूषितं

गोकुलानन्दं ब्रह्माध्यैरपि पूजितम् ||

ॐ अस्य श्री मङ्गळ गौरी देवता प्राण प्रतिष्ठापन महा मन्त्रस्य

ब्रह्मा विष्णु महेश्वरा ऋषयः |

ऋग्यजुः सामाथर्वाणि छन्दांसि |

सकलजगत्सृष्टिस्थिति संहारकारिणी

प्राणशक्तिः परा देवता |

आं बीजम् | ह्रीं शक्तिः | क्रौम् कीलकम् |

अस्यां मूर्तौ प्राण प्रतिष्ठापने विनियोगः ||

|| करन्यासः ||

आं अंगुष्ठाभ्यां नमः ||

ह्रीं तर्जनीभ्यां नमः ||

क्रौं मध्यमाभ्यां नमः ||

आं अनामिकाभ्यां नमः ||

ह्रीं कनिष्ठिकाभ्यां नमः ||

क्रौं करतलकरपृष्ठाभ्यां नमः ||

|| अङ्ग न्यासः ||

आं हृदयाय नमः ||

ह्रीं शिरसे स्वाहाः ||

क्रौं शिखायै वषट् ||

आं कवचाय हुं ||

ह्रीं नेत्रत्रयाय वौषट् ||

क्रौं अस्त्राय फट् ||

भूर्भुवस्वरोम् इति दिग्बन्धः ||

आं ह्रीं क्रौम् क्रौम् ह्रीं आं |
य र ल व श ष स ह |
ॐ अहं सः सोऽहं सोऽहं अहं सः ||

अस्यां मूर्ते प्राणः तिष्ठंतुः . अस्यां मूर्ते जीवः तिष्ठन्तु |
अस्यां मूर्ते सर्वेन्द्रियाणि मनस्त्वत् चक्षुः श्रोत्र जिह्वा घ्राणैः वाक्वाणि पादपायोपस्थानि प्राण अपान व्यान उदान समान अत्रागत्य सुखेन चिरं तिष्ठन्तु स्वाहाः |

असुनीते पुनरस्मासु चक्षुवः पुनः प्राणमिहीनो देहिभोगं ज्योक्ष क्षेम सूर्यमुच्चरन्तम् अनुमते मृडयान स्वस्ति अमृतं वै प्राणा अमृतमापः प्राणानेव यथा स्थानं उपह्वयेत् ||

स्वामिन् सर्व जगन्माते यावत्पूजावसानकं तावत्वम् प्रीतिभावेन बिम्बेस्मिन् कलशेस्मिन् प्रतिमायां सन्निधिं कुरु ||
इति प्राणं प्रतिष्ठापयामि ||
सकल पूजार्थे अक्षतान् समर्पयामि ||

---

२३ ध्यानं

ॐ श्री श्रावण मङ्गळ गौर्यै नमः ( repeat 9 times)

नीललोहित तथाङ्ग हरिद्रा कुम्कुमादिशु
ताम्बूलपुष्पगम् देशु दर्पणम् कच षोडके
सिन्दूरे कज्जलै वस्त्रै कन्क सौधौफलादिशु
घृतदीपस्य मङ्गळद्रव्य भाजने
शुभकार्येशु सन्तोषे नित्यलीला विलासिनीम्
सम्पूर्ण वदनाम् सर्वज्ञाम् शिव सुन्दरीम्
वरभयकराम्भोजाम् पाशान्कुश कवोज्वलाम्
सावित्रीम् सदयाम् देवीम् सर्वमङ्गळ देवताम्
बालान्वोद्याम् सम्पूज्याम् मङ्गळ द्रव्यवासिनीम्
सर्वाङ्कार सम्पूर्णम् भावयेत्सर्वमङ्गळाम्

ऐम् ह्रीम् क्रीम् समसर्वमङ्गळायै मङ्गळगौर्यै नमः ध्यानात् ध्यानं समर्पयामि

---

२४ आवाहनं
( hold flowers in hand)

अत्रागच्छ महादेवि सर्वलोक सुखप्रदे |
यावद् व्रतं अहं कुर्वे पुत्र पौत्राभिवृद्धये ||

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् |
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ||

देवीं आवाहयामि ||
ॐ श्री श्रावण मङ्गळ गौर्यै नमः
आवाहनं समर्पयामि ||
(offer flowers to Goddess).
आवाहितो भव | स्थापितो भव | सन्निहितो भव | सन्निरुद्धो भव | अवकुण्ठितो भव | सुप्रीतो भव | सुप्रसन्नो भव | सुमुखो भव | वरदो भव |

प्रसीद प्रसीद ||

(show mudras to Goddess)

---

२५ आसनं

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् |
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ||

रौप्येन चासनम् दिव्यम् रत्नमाणिक्य शोभितम्
मयागतगृहाणेत्वाम् गौरी कौमारिवल्लभे

ॐ श्री श्रावण मङ्गळ गौर्यै नमः
आसनं समर्पयामि ||
(offer flowers/axathaas)

---

२६ पाद्यं

(offer water)
अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् |
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ||
गन्धपुष्पाक्षतैर्युक्तम् पाद्यम् सम्पादितम् मया |
त्वम् गृहाण दयासिन्धो गौरी मङ्गळ देवता ||
ॐ श्री श्रावण मङ्गळ गौर्यै नमः |
पाद्यं समर्पयामि ||

---

२७ अर्घ्यं

(offer water)

कांसोस्मि तां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् |
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ||

शुद्धोदकं पात्रस्थं गन्ध पुष्पादि मिश्रितम् |
अर्घ्यं दास्यामिते देवि, गृहाण सुरपूजिते ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | अर्घ्यं समर्पयामि||

---

२८ आचमनीयं

(offer water or axathaa/ leave/flower)

चन्द्रां प्रभासां यशसा ज्वलंतीं श्रियं लोके देवी जुष्टामुदाराम् |
तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ||

कौमारवल्लभे देवि कुर्वाचमनम्बिके
निरन्तरमहम् वन्दे चरणा तव पार्वती

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | आचमनीयं समर्पयामि ||

---

२९ स्नानं

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः |
तस्य फलानि तपसानुदन्तुमायान्तरायाश्च बाह्या अलक्ष्मीः ||

मन्दाकिन्याः समानीतै हेमांभोरुह वासितैः |
स्नानं कुरुष्व देवेशि सलिलैश्च सुगन्धिभिः ||
ॐ श्री श्रावण मङ्गळ गौर्यै नमः | मलापकर्श स्नानं समर्पयामि ||

---

३० पञ्चामृत स्नानं

पयो दधि घृतम् चैवम् मधु शर्करयासमम्
पञ्चामृतेन स्नापनम्कारयेत्वाम् शिवप्रिये
ॐ श्री श्रावण मङ्गळ गौर्यै नमः | पञ्चामृत स्नानं समर्पयामि ||

---

३१ शुद्धोदक स्नानं (Pure water bath)
sprinkle water all around
ॐ आपोहिष्टा मयो भुवः | ता न ऊर्जे दधातन |
महेरणाय चक्षसे | यो वः शिवतमो रसः
तस्यभाजयते ह नः |
उशतीरिव मातरः | तस्मा अरंगमामवो |
यस्य क्षयाय जिन्वथ | आपो जनयथा च नः ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | शुद्धोदक स्नानं समर्पयामि ||
(after sprinkling water around throw one tulsi leaf to the north)

---

३२ महा अभिषेकः
(Sound the bell pour water from kalasha)

श्री सूक्त

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् |
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह || १||

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् |
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् || २ ||

अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् |
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् || ३ ||

कांसोस्मि तां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् |
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् || ४ ||

चन्द्रां प्रभासां यशसा ज्वलंतीं श्रियं लोके देवजुष्टामुदाराम् |
तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे || ५ ||

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः |
तस्य फलानि तपसानुदन्तुमायान्तरायाश्च बाह्या अलक्ष्मीः || ६ ||

उपैतु मां देवसखः कीर्तिश्च मणिना सह |
प्रादुर्भूतोऽस्मि राष्ट्रेस्मिन्कीर्तिमृद्धिं ददातु मे || ७ ||

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् |
अभूतिमसमृद्धिं च सर्वां निर्णुदमे गृहात् || ८ ||

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् |
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् || ९ ||

मनसः काममाकूतिं वाचः सत्यमशीमहि |
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः || १० ||

कर्दमेन प्रजाभूतामयि सम्भवकर्दम |
श्रियं वासय मे कुले मातरं पद्ममालिनीम् || ११ ||

आपः सृजन्तु स्निग्धानि चिक्लीतवसमे गृहे |
निचदेवीं मातरं श्रियं वासय मे कुले || १२ ||

आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् |
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह || १३ ||

आर्द्रां यःकरिणीं यष्टिं पिङ्गलां पद्ममालिनीम् |
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह || १४ ||

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् |
यस्यां हिरण्यं प्रभूतं गावोदास्योश्वान्विन्देयं
पुरुषानहम् || १५ ||

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् |
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् || १६ ||

पद्मानने पद्म ऊरू पद्माक्षी पद्मसम्भवे |
तन्मेभजसि पद्माक्षी येन सौख्यं लभाम्यहम् || १७ ||

अश्वदायी गोदायी धनदायी महाधने |
धनं मे जुषतां देवि सर्वकामांश्च देहि मे || १८ ||

पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि |
विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि
संनिधत्स्व || १९ ||

पुत्रपौत्रं धनं धान्यं हस्त्यश्वादिगवेरथम् |
प्रजानां भवसि माता आयुष्मन्तं करोतु मे || २० ||

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः |
धनमिन्द्रो बृहस्पतिर्वरुणं धनमस्तु ते || २१ ||

वैनतेय सोमं पिब सोमं पिबतु वृत्रहा |
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः || २३ ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | श्री सूक्त स्नानं समर्पयामि ||

---

३३ प्रतिष्ठापना

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | (repeat 12 times)

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | सुप्रतिष्ठमस्तु ||

---

३४ वस्त्र

(offer two pieces of cloth for the Goddess)

वस्त्रम् च सोमदैवत्यम् लज्जायास्तु निवारणीम्
मया समर्पितुम् भक्त्या गृहाण परमेश्वरी

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | वस्त्रयुग्मं समर्पयामि ||

---

३५.१ कंचुकी

कंचुकीम् उपवस्त्रम् च नानारत्न्यै समन्वितम् |

गृहीत्वा मयादत्तम् जगदीश्वरी पार्वति ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | कंचुकीं समर्पयामि||

---

३५.२ कण्ठ सूत्र

मांगल्य तंतुमणिभिः मुक्तैश्चैव विराजितं |
सौमंगल्याभिवृध्यर्थं कंठसूत्रं ददामिते ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः |कंठसूत्रं समर्पयामि||

---

३५.३ ताडपत्राणि

ताडपत्राणि दिव्याणि विचित्राणि शुभानि च |
कराभरणयुक्तानि मातस्तत्प्रतिगृहयतां ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | ताडपत्राणि समर्पयामि ||

---

३५.४ हरिद्रा

हरिद्रा रंजिते देवी सुख सौभाग्य दायिनी |
हरिद्रां ते प्रदास्यामि गृहाण परमेश्वरि ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | हरिद्रा समर्पयामि||

---

३५.५ कुंकुम

कुंकुमं कामदं दिव्यं कामिनी काम संभवं |
कुंकुमार्चिते देवी सौभाग्यार्थं प्रतिगृहयतां ||
ॐ श्री श्रावण मङ्गळ गौर्यै नमः | कुंकुमं समर्पयामि||

---

३५.६ कज्जल

सुनील भ्रमराभसं कज्जलं नेत्र मण्डनं |
मया दत्तं इदं भक्त्या कज्जलं प्रतिगृहयतां ||
ॐ श्री श्रावण मङ्गळ गौर्यै नमः | कज्जलं समर्पयामि ||

---

३५.७ सिंदूर

विद्युत् कृशानु संकाशं जपा कुसुमसन्निभं |
सिन्दूरंते प्रदास्यामि सौभाग्यं देहि मे चिरं ||
ॐ श्री श्रावण मङ्गळ गौर्यै नमः | सिन्दूरं समर्पयामि ||

---

३५.८ नाना आभरणं

स्वभावा सुन्दरांगि त्वं नाना रत्न युतानि च |
भूषणानि विचित्राणि प्रीत्यर्थं प्रतिगृहयतां ||
ॐ श्री श्रावण मङ्गळ गौर्यै नमः | नाना आभरणानि समर्पयामि ||

---

३५.९ नाना परिमल द्रव्य

नाना सुगन्धिकम् द्रव्यम् चूर्णिकृत्य प्रयत्नतः |
ददामि ते नमस्तुभ्यं, प्रीत्यर्तं प्रतिगृहयतां ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | नाना परिमल द्रव्यं समर्पयामि ||

---

३६ यज्ञ्योपवीत

तप्त हेमकृतम् सूत्रम् मुक्त धाम विभूशिताम् |
उपवीतम् इदम् देवि गृहाणत्व शुभ प्रदे ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | यज्ञ्योपवीतम् समर्पयामि ||

---

३७ गंध

कुङ्कुमागरु कस्तूरि कर्पूरम् चन्दनम् तथा |
तुभ्यम् दास्यामि देवी स्वीकुरु त्रिपुर सुन्दरि ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | गंधं समर्पयामि||

---

३८ हस्तभूषण

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | हस्तभूषणं समर्पयामि ||

---

३९ अक्षत

श्वेत तण्डुल संयुक्तान् कुङ्कुमेन विराजितान् |
अक्षतान् गृहयताम् देवि नारायणि नमोऽस्तुते ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | अक्षतान् समर्पयामि ||

---

४० पुष्प

तुळसी कुन्द मन्दार, जाजी पुन्नाग चम्पकैः |
कदम्ब करवीरैश्च कुसुमे शतपत्रकैः ||

ॐ श्री श्रावण मङ्गळ गौर्यै नमः | पत्र पुष्पाणि वनमालां च समर्पयामि ||

---

४१ नाना अलंकार

कटि सूताङ्गुली येच कुण्डले मुकुठं तथा |
वनमालां कौस्तुभं च गृहाण सुलोचनि ||
ॐ श्री श्रावण मङ्गळ गौर्यै नमः | नाना अलंकारान् समर्पयामि ||

---

४२ अथ अङ्गपूजा

ॐ उमायै नमः | पादौ पूजयामि ||
ॐ गौर्यै नमः | जङ्गे पूजयामि ||
ॐ पार्वत्यै नमः | जानुनी पूजयामि ||
ॐ जगन्मात्रे नमः | ऊरून् पूजयामि ||
ॐ जगत्प्रतिष्टायै नमः | कटिं पूजयामि ||
ॐ मूलप्रकृते नमः | नाभिं पूजयामि ||
ॐ अम्बिकायै नमः | उदरं पूजयामि ||
ॐ अन्नपूर्णायै नमः | स्थनौ पूजयामि ||
ॐ शिवसुन्दर्यै नमः | वक्षस्थलं पूजयामि ||
ॐ महाबलायै नमः | बाहुं पूजयामि ||
ॐ वरप्रदायै नमः | हस्तौ पूजयामि ||
ॐ कम्बुकन्ट्यै नमः | कंठं पूजयामि ||
ॐ ब्रह्मविद्यायै नमः | जिह्वं पूजयामि ||
ॐ शन्कर्यै नमः | मुखं पूजयामि |
ॐ शिवायै नमः | नेत्रे पूजयामि ||

ॐ रुद्राण्यै नमः | कर्णौ पूजयामि ||
ॐ सर्वमङ्गळायै नमः | ललाटं पूजयामि ||
ॐ सर्वेश्वर्यै नमः | शिरः पूजयामि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः | सर्वांगाणि पूजयामि ||

---

४३ अथ पुष्प पूजा

ॐ रमायै नमः| करवीर पुष्पं समर्पयामि ॥
ॐ इन्दिरायै नमः | जाजी पुष्पं समर्पयामि ॥
ॐ शाश्वतायै नमः | चम्पक पुष्पं समर्पयामि ॥
ॐ राजीवलोचनायै नमः | वकुल पुष्पं समर्पयामि ॥
ॐ श्रीमत्यै नमः| शतपत्र पुष्पं समर्पयामि ॥
ॐ राजेश्वर्यै नमः | कल्हार पुष्पं समर्पयामि ॥
ॐ मुनिगण सेवितायै नमः | सेवन्तिका पुष्पं समर्पयामि ॥
ॐ कमलवासिन्यै नमः | मल्लिका पुष्पं समर्पयामि ॥
ॐ पुष्टै नमः | इरुवंतिका पुष्पं समर्पयामि ॥
ॐ विश्ववन्ध्यायै नमः | गिरिकर्णिका पुष्पं समर्पयामि ॥
ॐ जनार्दनायै नमः | आथसी पुष्पं समर्पयामि ॥
ॐ अपराजितायै नमः | पारिजात पुष्पं समर्पयामि ॥
ॐ भार्गव्यै नमः| पुन्नाग पुष्पं समर्पयामि ॥
ॐ वाक्विलासिन्यै नमः| कुन्द पुष्पं समर्पयामि ॥
ॐ अदिशक्त्यै नमः | मालति पुष्पं समर्पयामि ॥
ॐ सर्वेश्वर्यै नमः | केतकी पुष्पं समर्पयामि ॥
ॐ सर्वमङ्गळायै नमः | मन्दार पुष्पं समर्पयामि ॥
ॐ वरप्रदायै नमः | पातली पुष्पं समर्पयामि ॥
ॐ कल्याण्यै नमः | अशोक पुष्पं समर्पयामि ॥
ॐ पापध्वंसिन्यै नमः| पूग पुष्पं समर्पयामि ॥
ॐ प्रसन्न वदनायै नमः| दादिमा पुष्पं समर्पयामि ॥
ॐ शिवप्रियायै नमः | देवदारु पुष्पं समर्पयामि ॥
ॐ ताटकन्तकायै नमः | सुगन्ध राज पुष्पं समर्पयामि॥
ॐ वेदान्तसारायै नमः| कमल पुष्पं समर्पयामि ॥

ॐ श्री श्रावण मङ्गल गौर्यै नमः | पुष्प पूजां समर्पयामि ||

---

४४ अथ पत्र पूजा

ॐ मङ्गल गौर्यै नमः | तुळसी पत्रं समर्पयामि ||
ॐ आदिशक्त्यै नमः | जाजी पत्रं समर्पयामि ||
ॐ पराशक्त्यै नमः | चम्पका पत्रं समर्पयामि ||
ॐ स्वदायै नमः | बिल्व पत्रं समर्पयामि ||
ॐ स्वाहाःयै नमः | दूर्वायुग्मं समर्पयामि ||

ॐ मुनिगणसेवितायै नमः | सेवन्तिका पत्रं समर्पयामि ||
ॐ जगत्कारिणे नमः | मरुग पत्रं समर्पयामि ||
ॐ महामातायै नमः | दवन पत्रं समर्पयामि ||
ॐ महाभुजायै नमः | करवीर पत्रं समर्पयामि ||
ॐ सौम्यायै नमः | विष्णु क्रान्ति पत्रं समर्पयामि||

ॐ ब्रह्मण्यायै नमः | माचि पत्रं समर्पयामि ||
ॐ मुनिसम्स्तुतायै नमः | मल्लिका पत्रं समर्पयामि||
ॐ महायोगिन्यै नमः | इरुवन्तिका पत्रं समर्पयामि||
ॐ पद्महस्तायै नमः | अपामार्ग पत्रं समर्पयामि ||

ॐ अपराजितायै नमः | पारिजात पत्रं समर्पयामि ||

ॐ पुण्यचरित्रायै नमः | दाडिमा पत्रं समर्पयामि ||
ॐ दया सागर्यै नमः | बदरी पत्रं समर्पयामि ||
ॐ स्मितवक्त्रायै नमः | देवदारु पत्रं समर्पयामि ||
ॐ मितभाषिण्यै नमः | शामी पत्रं समर्पयामि ||
ॐ पूर्वभाषिण्यै नमः | आम्र पत्रं समर्पयामि ||

ॐ हरप्रियायै नमः | मन्दार पत्रं समर्पयामि ||
ॐ श्रुतिस्तुतायै नमः | वट पत्रं समर्पयामि ||
ॐ जितवर्षायै नमः | कमल पत्रं समर्पयामि ||
ॐ इन्दुशीतलायै नमः | वेणु पत्रं समर्पयामि ||

ॐ श्री श्रावण मङ्गल गौर्यै नमः | पत्रपूजां समर्पयामि||

---

४५ Katha

सर्वमङ्गल माङ्गल्ये शिवे सर्वार्थ साधिके |
शरण्ये त्र्यंबके देवि नारायणि नमोऽस्तुते ||

One of the ways in which the Pandavas spent their time during Vanavasa was listening to Lord Krishna's narration of various Poojas and Vrathas to be performed by mankind for the fulfillment of desires. On one such occasion Dharma Raja asks Lord Krishna to narrate a Vratha that will increase the "Aayu"-- the life Span. Lord Krishna replies 'Listen to me Yamanandana I will narrate a Unique Vratha, which not only increases the life span of Sons, but also removes the Vaidavyya - \Widowhood of a daughter. Listen to me with single minded devotion. In the olden times there was a city named Kundanipura, there lived a very good and famous merchant called Dharmapala. He was very rich. However his only problem was he had no children.

A Sadhu used to come to their house for Bikhsha, and he would go back without taking anything from them. This was a daily routine.

The merchant's wife was very sad about this attitude of the Sadhu and seeks a solution from her husband. The merchant tells his wife not to worry, and instructs her to keep gold coins ready the next day and put it into the Sadhu's hand before he left. The wife does the same the next day. The Sadhu becomes very angry; he tells her that he was not receiving anything from their house as they had no children and today by putting the Bhiksha forcibly, she had cheated him. So he curses her by saying "let you not have children". The merchant's wife says that she did it because of her Aviveka and begs him to give her relief from the curse. The Sadhu takes. pity on her and tells her to ask her husband to wear black clothes, and go to the forest on a black horse until the horse slips, the place where the horse slips needs to be dug until he finds the temple of Devi, perform pooja to the Devi and she will solve their problem. As per the instructions of the Sadhu the merchant goes to the forest wearing black clothes riding a black horse. The forest was very thick and fearful and full of wild animals. He goes on until he finds a lovely pond full of lotus flowers. He refreshes himself and his horse and goes on, until the horse slips. The merchant starts digging the place until he finds the temple of a Devi. The temple was surrounded with lovely flowering and fruit bearing trees. The walls of the temple were of Gold and precious gems. He enters the temple with devotion and performs Pooja to the Goddess. The Devi is pleased for having received such a wonderful Pooja in the forest, appears before him and tells him to ask for a boon. He tells the Devi that he is very sad as he had no children.

The Devi tells him that he is destined not to have children, hence she asks him to choose between a daughter who becomes a widow soon, a wonderful

son with a short life or a blind son with a long life. The merchant chooses a wonderful son with a short life. The Devi Instructs him to pick a mango fruit by climbing on the Ganapathy in front of the temple and give it to his wife, and their desires will be fulfilled. The merchant becomes very happy and goes to the tree and plucks one fruit, he sees a lot of fruits on the tree and plucks more, when he comes down he has only one fruit, not satisfied he climbs again and plucks more fruits and the result is the same everytime. During all his attempts he was climbing on the Lord Ganeshas Idol to pluck the fruits. Lord Ganesha becomes angry at the greed of the merchant and curses him that his son will die at the age of 16, by snake bite. The sad merchant returns home and gives the fruit to his wife. They get a beautiful son. They name him “Shiva," perform his upanayana at the age of 8 and when he is 10 years old the wife asks the merchant to get his son married. The merchant tells her that he has decided to send his son on Kashi Yatra and after he returns they can arrange for his marriage. They send their son along with his uncle for the Yatra. Both the boy and his uncle on their way to Kashi reach a city called Pratishtanagara. In a garden they see a few young ladies fighting, a girl curses another young girl called Susheela as being unfortunate and to become a widow soon. Susheela who is very pretty and shining like gold, is unperturbed she replies " Your curse will have no effect on me, as my mother performs a Pooja called "Sri Mangala Gowri Vratha", The Pooja is so powerful that even in the surroundings where the Pooja is performed , no ladies will be widowed. The Uncle of the boy Shiva who was watching this feels that, if the mother of Susheela blesses Shiva, possibly he may not die young. So they follow the girl and start living in the temple near the girl’s house. Susheela’s father by name Hari was very devoted to the Deity of the temple and he never used to take any step in his life without the permission of the God. He decides to get his daughter married, so he goes with his wife to the temple to ask permission from the Deity. They request Lord Shiva of the temple not getting any answer, they approach the Goddess of the temple. The uncle of Shiva who was very clever, makes use of the opportunity, hides behind the idol of the Devi and tells Susheela’s parents to get their.daughter married to a man called Shiva who is a stranger to the city. Next day the uncle of Shiva approaches Susheela’s parents and tells them that he has come with a boy called Shiva and is looking out for a suitable bride, and asks them for the hand of Susheela for Shiva. The parents of Susheela readily agree. On the night of their marriage, when they were asleep Sree Mangala Gowri appears in Susheela’s dream as her mother and tells her that a big snake is coming to bite her husband and asks her to wake up give the snake milk, keep a pot so that the snake enters into the pot and close the pot with a cloth. Susheela wakes up and sees a very big snake approaching her husband fast, she gives milk to the Snake and keeps a pot The snake• gets into the pot and she ties it with a doth. After that Shiva wakes up and tells her that he is hungry. She gets sweets for him to eat. He eats the sweets, washes his hands and keeps his ring in the vessel and goes to sleep. Next day morning he leaves the house. In the morning Susheela wakes up and takes the blessings of her mother. Now as the bridegroom had gone Lord Shiva himself appears in the guise of Susheela’s husband. Susheela tells her mother that this is not her husband, listening to which the Lord Shiva in the guise of groom disappears. Everyone was worried and start looking out for Shiva. They do Annadhana to get back the groom. They set up an Annachatra, Susheela used to wash the feet of people keeping her husband’s ring and her mother used to pour water. Hari her father and brothers used to serve them with food and look after their comforts, this went on for some tlme. Meanwhile Shiva and his Uncle went to City of Kashi, did a lot of Dhana and Dharma. Shiva completes 16 years and dreams that he is being taken away by Yamadhutas, and Lord Shiva came and saved him. The Uncle of Shiva becomes very happy that they got rid of a big problem. They hear from people the fame of the Annadhana being performed by Susheela’s parents and the praise of the qualities of

Susheela. When they go there, Susheela washes the feet of her husband and recognizes him. The parents of Susheela were very happy and give the son-in-law all respect and a lot of wealth. Meanwhile the parents of Shiva were very worried about the whereabouts of their Son who would die soon due to the short life span. Some messengers tell them all the news about Shiva, his marriage with Susheela and their well being. They were very happy and receive Shiva and Susheela with all pomp. They hear from their daughter-in-law the way to perform the “Sri Mangala Gowri Vratha" and get her to perform the Vratha.

This Vratha needs to be performed on Tuesdays, during Sravana Masa. The people performing the vratha need to fast. The Pooja of the Devi needs to be performed with Sraddha and Bhakti.

Om Sri Mangala Gowryay Namaha.

---

४६ अष्टोत्तर पूजा (chant dhyAna shloka )

सर्वमङ्गल माङ्गल्ये शिवे सर्वार्थ साधिके |
शरण्ये त्र्यंबके देवि नारायणि नमोऽस्तुते ||

ॐ श्री गौर्यै नमः
ॐ गणेश जनन्यै नमः
ॐ गुहाम्बिकायै नमः
ॐ जगन्नेत्रायै नमः
ॐ गिरितनु भवायै नमः
ॐ वीर भद्र प्रसुवे नमः
ॐ विश्व व्यापिन्यै नमः
ॐ विश्व रूपिण्यै नमः
ॐ अष्ट मूर्त्यात्मिकायै नमः
ॐ अष्ट दारिद्र्य शमन्यै नमः
ॐ शिवायै नमः
ॐ शम्भवायै नमः

ॐ शंकर्यै नमः
ॐ बालायै नमः
ॐ भवान्यै नमः
ॐ हैमवत्यै नमः
ॐ पार्वत्यै नमः
ॐ पाप नाशिन्यै नमः
ॐ नारायणम्शजायै नमः
ॐ नित्यायै नमः
ॐ निर्मलायै नमः
ॐ अम्बिकायै नमः
ॐ हेमाद्रिजायै नमः
ॐ वेदान्त लक्षणायै नमः

ॐ कर्म ब्रह्ममायै नमः
ॐ गङ्गाधर कुटुम्बिन्यै नमः
ॐ मृडान्यै नमः
ॐ मुनि सम्सेव्यायै नमः
ॐ मानिन्यै नमः
ॐ मेनकात्मजायै नमः
ॐ कुमार्यै नमः
ॐ कन्यकायै नमः
ॐ दुर्गायै नमः
ॐ कलिदोश विघातिन्यै नमः
ॐ कार्त्यायिन्यै नमः
ॐ भद्रदायिन्यै नमः

ॐ माङ्गल्य दायिन्यै नमः

ॐ सर्व मङ्गलायै नमः
ॐ मञ्जु भाशिन्यै नमः
ॐ माहेश्वर्यै नमः
ॐ महा मयायै नमः
ॐ मन्त्राराध्यायै नमः
ॐ महा बलायै नमः
ॐ सत्यै नमः
ॐ सर्व मयायै नमः
ॐ सौभाग्यधायै नमः
ॐ काम कालनायै नमः
ॐ कामाक्षितार्ध प्रदायै नमः

ॐ चन्द्रार्कयुत ततांकायै नमः
ॐ चिदम्बर शारीरिण्यै नमः
ॐ श्री चक्र वासिन्यै नमः
ॐ देव्यै नमः
ॐ कामेश्वरपत्यै नमः
ॐ कमलायै नमः
ॐ मुरारी प्रियार्धाङ्ग्यै नमः
ॐ पुत्र पौत्र वरप्रदायै नमः
ॐ पुण्यायै नमः
ॐ कृपापूर्णायै नमः
ॐ कल्याण्यै नमः
ॐ अन्चित्यायै नमः

ॐ त्रिपुरायै नमः
ॐ त्रिगुणाम्बिकायै नमः
ॐ पुरुषार्थ प्रदायै नमः
ॐ सत्य धर्म रथायै नमः

ॐ सर्व साक्षिन्यै नमः
ॐ शशाङ्क रूपिण्यै नमः
ॐ सरस्वत्यै नमः
ॐ विरजायै नमः
ॐ स्वाहाःयै नमः
ॐ स्वधायै नमः
ॐ प्रत्यांगिरम्बिकायै नमः
ॐ आर्यायै नमः

ॐ दाक्षायिन्यै नमः
ॐ दीक्षायै नमः
ॐ सर्वोत्तमोत्तमायै नमः
ॐ शिवाभि नामधेयायै नमः
ॐ श्रीविध्यायै नमः
ॐ प्रणवार्ध स्वरूपिण्यै नमः
ॐ ह्रींकार्यै नमः
ॐ नाद रूपायै नमः
ॐ सुन्दर्यै नमः
ॐ चण्ड्यै नमः
ॐ भगमालिन्यै नमः
ॐ भगालयै नमः

ॐ मातृकायै नमः
ॐ शूलिन्यै नमः
ॐ अमलायै नमः
ॐ अन्नपूर्णायै नमः
ॐ अकिलागम सम्स्तुत्यायै नमः
ॐ अम्बायै नमः
ॐ भानुकोटि सन्ध्यतायै नमः

ॐ षोडषाक्षर देवतायै नमः

ॐ महा गौर्यै नमः

ॐ श्यामलायै नमः

ॐ परायै नमः

ॐ शीतांशुकृत शेखरायै नमः

ॐ सर्वकाल सुमङ्गल्यै नमः

ॐ सोमशेखरायै नमः

ॐ अमर संसेव्यायै नमः

ॐ अमृतेश्वरायै नमः

ॐ सुख शचीचूडरसायै नमः

ॐ बाल्याराधित भूतिदायै नमः

ॐ हिरण्यायै नमः

ॐ सूक्ष्मायै नमः

ॐ हरिद्रा कुम्कुमाराध्यायै नमः

ॐ सर्वभोगप्रदायै नमः

ॐ मार्कण्डेय वरप्रदायै नमः

ॐ श्री नित्यगौरी देवतायै नमः

ॐ श्री श्रावण मङ्गल गौर्यै नमः | अष्टोत्तर पूजां समर्पयामि ||

---

४७ धूपं

दशांग गुग्गुलं धूपं चन्दनागरु संयुतम् |

समर्पितं मया भक्त्या महादेवि प्रतिगृह्यताम् ||

ॐ श्री श्रावण मङ्गल गौर्यै नमः | धूपं आघ्रापयामि ||

---

४८ दीपं

साज्यं त्रिवर्ति संयुक्तं वह्निना योजितुम् मया |

गृहाण मङ्गलं दीपं त्रैलोक्य तिमिरापहम् ||

ॐ श्री श्रावण मङ्गल गौर्यै नमः | दीपं दर्शयामि ||

---

४९ नैवेद्यं

( dip finger in water and write a square and 'shrii' mark inside the square. Place naivedya on 'shrii'. remove lid and sprinkle water around the vessel; place in each food item one washed leaf or flower or akshata )

ॐ महादेव्यैच विद्महे शिवपत्नीम्च धीमहि तन्नो गौरी प्रचोदयात्

ॐ श्री श्रावण मङ्गल गौर्यै नमः | (show mudras) ;

निर्वीषी करणार्थे तार्क्ष मुद्रा |

अमृती करणार्थे धेनु मुद्रा |

पवित्री करणार्थे शंख मुद्रा |

संरक्षणार्थे चक्र मुद्रा |

विपुलमाय करणार्थे मेरु मुद्रा |

(Touch naivedya and chant 9 times)'ॐ'

ॐ सत्यंतवर्तेन परिषिंचामि

(sprinkle water around the naivedya)

भोः! देवी भोजनार्थं आगच्छादि विज्ञाप्य |

(request Goddess to come for dinner)

सौवर्णे स्थालिवैर्ये मणिगण खचिते गोघृतां

सुपक्वां भक्ष्यां भोज्यां च लेह्यानपि

सकलमहं जोष्यम्न नीधाय नाना शाकैरूपेतं

समधु दधि घृतं क्षीर पानीय युक्तं

तांबूलं चापि देवि प्रतिदिवसमहं मनसा चिंतयामि ||

अद्य तिष्ठति यत्किञ्चित् कल्पितश्चापरंग्रिहे
पक्वान्नं च पानीयं यथोपस्कर संयुतं
यथाकालं मनुष्यार्थे मोक्ष्यमानं शरीरिभिः
तत्सर्वं देविपूजास्तु प्रयतां मे जगदीश्वरी
सुधारसं सुविपुलं आपोषणमिदं
तव गृहाण कलशानीतं यथेष्टमुपभुज्ज्यताम् ||

ॐ श्री श्रावण मङ्गल गौर्यै नमः |
अमृतोपस्तरणमसि स्वाहाः |
(drop water from sha.nkha)

ॐ प्राणात्मने दुर्गायै स्वाहाः |
ॐ अपानात्मने चण्डिकायै स्वाहाः |
ॐ व्यानात्मने भारत्यै स्वाहाः |
ॐ उदानात्मने हरिप्रियायै स्वाहाः |
ॐ समानात्मने भुवनेश्वर्यै स्वाहाः |

ॐ श्री श्रावण मङ्गल गौर्यै नमः |

नैवेद्यं गृह्यतां देवि भक्तिं मे अचलां कुरु |
ईप्सितं मे वरं देहि इहत्र च परां गतिं ||

श्री श्रावण मङ्गल गौर्यै नमस्तुभ्यम् महा नैवेद्यं उत्तमम् |
संगृहाण सुरश्रेष्ठिन् भक्ति मुक्ति प्रदायकम् ||

ॐ श्री श्रावण मङ्गल गौर्यै नमः | नैवेद्यं समर्पयामि ||

(cover face with cloth and chant gayatri mantra five times or repeat 12 times श्री श्रावण मङ्गल गौर्यै नमः )

सर्वत्र अमृतोपिधान्यमसि स्वाहाः ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः | उत्तरापोषणं समर्पयामि ||

(let flow water from shankha)

---

५० महा फलं
(put tulsi / axathaa on a big fruit)
इदं फलं मया देवी स्थापितं पुरतस्तव |
तेन मे सफलावाप्तिर्भवेत् जन्मनि जन्मनि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः | महाफलं समर्पयामि |

---

५१ फलाष्टक (put tulsi/akshata on fruits)

कूष्माण्ड मातुलिङ्गम् च कर्कठी दाडिमी फलम् |
रम्भा फलं जम्बीरं बदरं तथा ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः | फलाष्टकं समर्पयामि ||

---

५२ करोद्वर्तन

करोद्वर्तनकं देवी मया दत्तं हि भक्तितः |
चारु चंद्र प्रभां दिव्यं गृहाण जगदीश्वरी ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः | करोद्वर्तनार्थे चंदनं समर्पयामि ||

---

५३ तांबूलं

पूगीफलं सतांबूलं नागवल्लि दलैर्युतम् |
ताम्बूलं गृह्यतां देवी येल लवंग सम्युक्तम् ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । पूगीफल ताम्बूलं समर्पयामि ||

---

५४ दक्षिणा

हिरण्य गर्भ गर्भस्थ हेमबीज विभावसोः |
अनन्त पुण्य फलदा अथ शान्तिं प्रयच्छ मे ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । सुवर्ण पुष्प दक्षिणां समर्पयामि ||

---

५५ महा नीराजन

ॐ श्रियै जातः श्रिय अनिरियाय श्रियं वयो जरितृभ्यो ददाति
श्रियं वसाना अमृतत्वमायन् भवंति सत्य स मिथामितद्रौ
श्रिय एवैनं तत् श्रियामादधाति संततमृचा वषट्कृत्यं संतत्यै संधीयते प्रजया पशुभिः य एवं वेद ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । महानीराजनं दीपं समर्पयामि ||

---

५६ कर्पूर दीप

अर्चत प्रार्चत प्रियमेधासो अर्चत |
अर्चन्तु पुत्रका उत पुरं धृष्णवर्चत ||

कर्पूरकं महाराज्ञी रंभोद्भूतं च दीपकम् |
मङ्गलार्थं महीपाले सङ्गृहाण जगन्माते ||

ॐ श्री श्रावण मङ्गल गौर्यै नमः । कर्पूर दीपं समर्पयामि ||

---

५७ आरती

|| ॐ जय अम्बे गौरी ||

जय अम्बे गौरी
मैया जय श्यामा गौरी
तुम को निस दिन ध्यावत्
मैयाजी को निस दिन ध्यावत्
हरि ब्रह्मा शिवजी
बोलो जय अम्बे गौरी ||

मांग सिन्दूर विराजत टीको मृग मद को
मैया टीको मृग मद को
उज्वल से दो नैना चन्द्रवदन नीको
बोलो जय अम्बे गौरी||

कनक समान कलेवर रक्ताम्बर साजे
मैया रक्ताम्बर साजे
रक्त पुष्प गले माला कण्ठ हार साजे
बोलो जय अम्बे गौरी||
केहरि वाहन राजत खड्ग कृपाण धारि
मैया खड्ग कृपाण धारि
सुर नर मुनि जन सेवत तिनके दुख हारी
बोलो जय अम्बे गौरी||

कानन कुण्डल शोभित नासाग्रे मोती
मैया नासाग्रे मोती

कोटिक चन्द्र दिवाकर सम राजत ज्योती
बोलो जय अम्बे गौरी||

शुम्भ निशुम्भ बिडारे महिषासुर धाती
मैया महिषासुर धाति
धूम्र विलोचन नैना निशदिन मदमाती
बोलो जय अम्बे गौरी||

चण्ड मुण्ड सम्हार शोणित बीज हरे
मैया शोणित बीज हरे
मधु कैटभ दोव मारे सुर भय दूर करे
बोलो जय अम्बे गौरी||

ब्रह्माणी रुद्राणी तुम् कमला राणी
मैया तुम कमला राणी
आगम निगम बखानी तुम शिव पटरानी
बोलो जय अम्बे गौरी||

चौसठ योगिन गावत नृत्य करत भैरों
मैया नृतय करत भैरों
बाजत ताळ मृदंग और बाजत डमरू
बोलो जय अम्बे गौरी||
तुम हो जग की माता तुम ही हो भर्ता
मैया तुम ही हो भर्ता
भक्तन की दुख हर्ता सुख सम्पति कर्ता
बोलो जय अम्बे गौरी||

भुजा चार अति शोभित वर मुद्रा धारि
मैया वर मुद्रा धरी
मन वांछित फल पावत देवता नर नारी
बोलो जय अम्बे गौरी||

कंचन थाल विराजत अगर कपूर बाती
मैया अगर कपूर बाती
माल केतु में राजत कोटि रतन ज्योती
बोलो जय अम्बे गौरी||

मां अम्बे की आरती जो कोयी नर गावे
मैया जो कोयी नर गावे
कह्त शिवानन्द स्वामी सुख सम्पति पावे
बोलो जय अम्बे गौरी||

---

५८ प्रदक्षिणा

यानि कानि च पापानि जन्मांतर कृतानि च |
तानि तानि विनश्यन्ति प्रदक्षिण पदे पदे ||
अन्यथा शरणं नास्ति त्वमेव शरणं मम |
तस्मात् कारुण्य भावेन रक्ष रक्ष जनार्दनी ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । प्रदक्षिणान् समर्पयामि ||

---

५९ नमस्कार

नमः सर्व हितार्थाय जगदाधार हेतवे |
साष्टाङ्गोयं प्रणामस्ते प्रयत्नेन मया कृतः |
ऊरूसा शिरसा दृष्ट्वा मनसा वाचसा तथा |
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोष्टाङ्गं उच्यते ||

शात्येनापि नमस्कारान् कुर्वतः जगदीश्वरि |
शत जन्मार्चितम् पापम् तत्क्षणमेव नश्यति ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । नमस्कारान्
समर्पयामि ||

---

६० राजोपचार
गृहाण परमेश्वरी सरत्ने छत्र चामरे |
दर्पणं व्यञ्जनं चैव राजभोगाय यत्नतः ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । छत्रं समर्पयामि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । चामरं समर्पयामि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । गीतं समर्पयामि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । नृत्यं समर्पयामि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । वाद्यं समर्पयामि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । दर्पणं समर्पयामि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । व्यंजनं समर्पयामि||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । आन्दोलनं
समर्पयामि||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । राजोपचारान्
समर्पयामि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । सर्वोपचारान्
समर्पयामि ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः । समस्त राजोपचारार्थे
अक्षतान् समर्पयामि ||

---

६१ मंत्र पुष्प

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् |
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ||

विद्या बुद्धि धनेश्वर्य पुत्र पौत्रादि संपदः |
पुष्पांजलि प्रदानेन देहिमे ईप्सितं वरम् ||

ॐ स्वस्ति साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं
पारमेष्ठां राज्यं महाराज्यमाधिपत्यमयं समंत
पर्यायी स्यात् सार्वभौमः सार्वायुष आंतादा
परार्धात् पृथिव्यै समुद्रपर्यंताया एकराळिति तदप्येषः
श्लोकोऽभिगीतो मरूतः परिवेष्टारो मरुतस्या वसन्
ग्रहे आवीक्षितस्य कामप्रेर्विश्वेदेवा सभासद इति ||

ॐ श्री श्रावण मङ्गल गौर्यै नमः । मंत्रपुष्पं समर्पयामि
||

---

६२ शङ्ख ब्रमण (make three rounds of shankha with water like arati and pour down; chant ॐ 9 times and show mudras)

इमां आपशिवतम इमं सर्वस्य भेषजे |
इमां राष्ट्रस्य वर्धिनि इमां राष्ट्र भ्रतोमत ||

---

६३ तीर्थ प्राशन
अकाल मृत्यु हरणं सर्व व्याधि निवारणम् |
सर्व पाप उपशमनम् श्री गौरी पादोदकं शुभम् ||

---

६४ विसर्जन पूजा

आराधितानां देवतानां पुनः पूजां करिष्ये ||
ॐ श्री श्रावण मङ्गल गौर्यै नमः ।

पूजांते छत्रं समर्पयामि |
चामरं समर्पयामि |
नृत्यं समर्पयामि |

गीतं समर्पयामि ।
वादयं समर्पयामि ।
आंदोलिक आरोहणं समर्पयामि ।
अश्वारोहणं समर्पयामि ।
गजारोहणं समर्पयामि ।
ॐ श्री श्रावण मङ्गल गौर्यै नमः । समस्त राजोपचार देवोपचार
शक्त्युपचार भक्त्युपचार पूजां समर्पयामि ॥

---

६५ आत्म समर्पण

यस्य स्मृत्या च नाम्नोक्त्या तपः पूजा क्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तं अच्युतम् ॥

अनेन मया कृतेन, श्री श्रावण मङ्गल गौरी व्रतेन,
श्री श्रावण मङ्गल गौरी सुप्रीता सुप्रसन्ना वरदा भवतु.
मध्ये मन्त्र तन्त्र स्वर वर्ण न्यूनातिरिक्त लोप
दोष प्रायश्चित्तार्थं देवि नामत्रय महामन्त्र
जपं करिष्ये ॥

ॐ गौर्यै नमः ॐ शिवायै नमः ॐ श्रावण मङ्गल गौर्यै नमः
ॐ गौर्यै नमः ॐ शिवायै नमः ॐ श्रावण मङ्गल गौर्यै नमः
ॐ गौर्यै नमः ॐ शिवायै नमः ॐ श्रावण मङ्गल गौर्यै नमः

मन्त्रहीनम्, क्रियाहीनम्, भक्तिहीनम् ज़नार्दनि ।
यत् पूजितम् मया देवि परिपूर्णम् तदस्तु मे ॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृति स्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति
समर्पयामि ॥

नमस्करोमि । श्री श्रावण मङ्गल गौरी प्रसादं शिरसा गृह्णामि ॥

---

६६ क्षमापनं

अपराध सहस्राणि क्रियन्ते अहर्निशं मया ।
तानि सर्वाणि मे देवि क्षमस्व परमेश्वरि ॥

यान्तु देव गणाः सर्वे पूजां आदाय पार्थिवीम् ।
इष्ट काम्यार्थ सिद्ध्यर्थं पुनरागमनाय च ॥
(shake the kalasha)

---

Puja Text – Sri S.A.Bhandarkar
Transliterated by Sowmya Ramkumar
Send corrections to
(somsram[at]gitaaonline.com)
Last updated on Aug 11, 2012